उपोद्घात-मङ्गलादि.

इह खल्वार्यमण्डलमध्योपलब्धजन्मानोऽपि निष्पङ्कपङ्कजपुञ्जोज्वलकुलजातिप्रभृतिगुणमणिरमणीयताभाजोऽपि तथाविधशास्त्राभ्यासवशोपजातजात्यमतिमाहात्म्यापहस्तितबृहस्पतयोऽपि विहितौदार्यदाक्षिण्यप्रियंवदत्वाद्यनुपमकृत्यपरंपरासंपादितसकलमनस्विमानवमनःप्रमोदसंपदोऽपि स्वभावत एव मन्दमोहमदिरामदतया मनाक्प्राप्तनिर्वाणपुरपथानुकूलविषयवैराग्या अपि प्राणिनः प्रायो जिनोपज्ञानि सकलकुशलारम्भमूलवीजानि अत एवाधरीकृतनिधानकामधेनुप्रमुखपदार्थप्रभावाणि दूरसमुत्सारितप्रचुरतरमोहतिमिरप्रसराण्युपदेशपदानि विना न सम्यग्दर्शनादिपरिपूर्णमोक्षमार्गावतारसारा भवितुमर्हन्ति । कथंचित्तत्रावतीर्णा अप्यनादिकालविलग्नविलीनवासनासंतानविषवेगावेशवशेन क्षोभ्यमाणमनसो न स्थैर्यमवलम्बितुमलं, यद् वक्ष्यति,—"सफलो एसुवएसो गुणठाणारंभगाण भव्वाण । परिवडमाणाण तहा पायं न उ तट्ठियाणं तु ॥" इत्यवधार्य परहिताधाननिविडनिबद्धबुद्धिर्भगवान् सुगृहीतनामधेयः श्रीहरिभद्रसूरिरुपदेशपदनामकं प्रकरणं चिकीर्षुरादावेव मङ्गलाभिधेयप्रयोजनप्रतिपादकमिदं गाथायुग्ममाह,—

**नमिऊण महाभागं तिलोगनाहं जिणं महावीरं । लोयालोयमियंकं सिद्धं सिद्धोवदेसत्थं ॥ १ ॥**
**वोच्छं उवएसमए कइइ अहं तदुवदेसओ सुहुमे । भावत्थसारजुत्ते मंदमइविबोहणट्ठाए ॥ २ ॥** ॥ १ ॥

इह चाद्यगाथया सकलाकुशलकलापनिर्मूलोन्मूलकत्वेन समीहितशास्त्रनिष्पत्तिहेतुरादिमङ्गलमुक्तम्, द्वितीयया तु प्रेक्षावत्प्रवृत्त्यर्थं साक्षादेवोपदेशपदलक्षणमभिधेयं, मन्दमतिश्रोतृजनाववोधलक्षणं च प्रयोजनम् । सामर्थ्याच्चाभिधाना-

श्रीमन्मुक्तिकमलजैनमोहनमालापुष्पम्—

परहिताधाननिबिडनिबद्धबुद्धिसुगृहीतनामधेयभगवत्—श्रीहरिभद्रसूरिविरचित

श्रीमन्मुनिचन्द्रसूरिविनिर्मितया टीकया विभूषित

# श्रीउपदेशपदमहाग्रन्थः ।

नमः श्रीसर्वज्ञाय ।

यस्योपदेशपदसंपदमापदंतसंपादिका सपदि संघटितश्रियं च ।
आसाद्य सन्ति भविनः कृतिनः प्रयत्नात् तं वीरमीरितरजस्तमसं प्रणम्य ॥ १ ॥

तत्त्वामृतोदधीनामानन्दितसकलविबुधहृदयानाम् । उपदेशपदानामहमुपक्रमे विवरणं किंचित् ॥ २ ॥
पूर्वैर्यद्यपि कल्पितेह गहना वृत्तिः समस्त्यल्पधीर्लोकः कालबलेन तां स्फुटतया बोद्धुं यतो न क्षमः ।
तत्तस्योपकृतिं विधातुमनघां स्वस्यापि तत्त्वानुगां प्रीतिं संतनितुं स्वबोधवचनो यत्नोऽयमास्थीयते ॥ ३ ॥

Printed by Ramchandra Yesu Shedge, at the Nirnaya-sagar Press, No. 23, Kolbhat Lane, Bombay.

Published by Shâh Lalchand Nandlal; Secretary; Shriman-Muktikamal-Jain-Mohanmala.
Kothipole, Baroda.

---

परमोपकारि–अस्मद्गुरुपादैः-अनुयोगाचार्य श्रीमोहनविजयगणिवरैस्समुपदिष्टा एते–
द्रव्यसहायकाः । इत्यत्र परमुपकृतं श्रेयःकर्मणि ।

२००० शाह चुनीलाल कमळशी. मु० हळवद–हाल मुंबई ।
६०० शाह पोपटलाल डाह्याभाई. लींच ।
५०० शाह गुलाबचंद नगीनदास. अमदावाद ।

---

श्रीमन्मुक्तिकमलजैनमोहनमाला—पुष्पम् १९.

श्वेतपटपटलप्रधानप्रावचनिकपुरुषप्रवरचतुर्दशशतप्रकरणप्रणायिसुगृहीतनामधेय—श्रीहरिभद्रसूरिप्रणिते

श्रीमन्मुनिचन्द्रसूरिविनिर्मितया टीकया समलङ्कृतः

# श्रीउपदेशपद-महाग्रन्थः ।

## ( प्रथमो विभागः )

श्रीमत्तपागच्छाम्बरनभोमणिश्रीमन्मुक्तिविजय(मूलचंदजी)गणिपुङ्गवपट्टधरबालब्रह्मचारिश्रीमद्विजयकमलसूरि-पुरन्दर शिष्यरत्न—अनुयोगाचार्य (पं.) श्रीमन्मोहनविजयगणिवरशिष्य पं० श्रीप्रतापविजयगणिना संशोधितः।

प्रकाशयित्री—कार्याधिकारि—"शाह लालचन्द नन्दलाल वकीलद्वारा श्रीमन्मुक्तिकमलजैनमोहनमाला ।

वडोदरा—कोठीपोल. ] वीर सं० २४४९ सन १९२२ विक्रम सं० १९७९ प्रतयः १००० [ विजयादशमी.